भट्टोत्पलेनाष्टाशीत्यधिकाष्टशततमे शके(८८८)ऽर्थात्०षट्षष्ट्य-धिकनवशततमख्रीष्टशके (९६६) वराहमिहिरकृतबृहज्जातकोपरि टीका निरमायि।

भास्कराचार्येण च 'युगानां कृपाः कालस्य मूर्तयो भगणाश्रिताः'। इत्येतत्सूर्यसिद्धान्तश्लोकद्वयं बह्वादरेण स्वमतपोषणाय स्वभगणो-पपत्तावुपन्यस्तम्। अतो यदि भास्करजन्मसमयात् षट्त्रिंशच्छ-ततमशका (१०३६) दर्थात् वेदेन्दुरुद्रख्रीष्टशकात् (१११४) पूर्वं वर्षशतादस्य प्रचारसमयः कल्प्यते तदा प्रचारत्वादयं सूर्यसिद्धान्तो वेदेन्दुशततम (१०१४) ख्रीष्टशकासन्ने प्रादुरासीदिति सिध्यति।

वेबरमहाशय—(Professor Weber) मतेन एजिप्ट-देशस्य तालमयस (Ptolemaias) नामा नृपतिरेव भारतवर्षे संस्कृतभाषायां तुरुमयनाम्ना प्रसिद्धः। पश्चात् स एव असुरमय इति भारतवर्षे प्रसिद्धः। अतः टालमी (Ptolemy) नामक-गणकग्रन्थस्य आलमाजेष्ट—(Almajest) संज्ञस्यानुवाद एवायं सूर्यसिद्धान्तः। आलमाजेष्ट-सूर्यसिद्धान्तयोः प्रकाराणां भेदान्नायं सूर्यसिद्धान्त आलमाजेस्टानुवाद इति शङ्करबालकृष्णादीक्षितमतं साधु प्रतिभाति। मयदैत्यानुकम्पयाऽथ सूर्यसिद्धान्तो भारतवर्षे प्राप्त इत्यत्र न कश्चित् संशयः। (द्रष्टव्यमस्य ग्रन्थस्य पृ. २३४)।

अत्रत्येभ्य आर्षसिद्धान्तेभ्यो बहूनि नूतनानि प्रकारान्तराणि सन्ति। अतोऽयं वसिष्ठब्रह्मसिद्धान्तादिभ्यो नूतनः। परन्त्वयं सूर्यसिद्धान्तः कृतयुगान्ते सूर्यप्रसादतो, मयदैत्येन लब्धस्तस्माद् भारतवर्षपण्डितेषु प्रसिद्ध इति एतत्कर्त्रा स्वयमेव ग्रन्थादौ लिखितम्। अत एव तेनैतत्सूर्यसिद्धान्तकृताऽस्मिन् ग्रन्थे रामशब्देन

तयं मन्दशब्देन नव जिनशब्देन सिद्धशब्देन च चतुर्विंशतिः संख्या क्वापि न पठिता यतस्ते शब्दाः कृतयुगान्तानन्तरं भारतवर्षे प्रचलिता इति मदुचितम्।

अस्तु यत् किमपि सत्यम्। संप्रति तु भारतवर्षीया विद्वांसोऽमुं सिद्धान्तं वेदवन्मन्यन्ते। गाणितिकाः स्नानजपहोमादिनाऽऽत्मानं पूतीकृत्यामुं पठन्ति पाठयन्ति चन्द्रसूर्योपरागयोश्च महापुण्य-प्राप्त्यर्थमस्य पाठं च कुर्वन्ति। ते महापुण्यजनकत्वादस्योपर्य-नेकाष्टीकाश्चक्रुः कुर्वन्ति च। अत एव मयाऽपि भारतीयं यूरप-देशीयरीतीश्चावलम्ब्येयं सुधावर्षिणी टीका रचिता यया भारती-यानां यूरपदेशीयानां च मिथो नूतनप्रकारज्ञानेनोपकारो भवतीति दृढमाशासे।

अथ बङ्गाली-एशियाटिकसोसाइटी-सभ्येभ्यो मम विशेषो धन्यवादो यैरनुकम्पया स्वसभाद्वारेण समादरेणेयं मुद्रितेति

२९—१०—१९१० [सुधाकरद्विवेदी।